॥ शनैश्चरस्तोत्रम् ॥

अथ शनैश्चरस्तोत्रप्रारम्भः ।

अस्य श्रीशनैश्चरस्तोत्रमहामन्त्रस्य काश्यप ऋषिः ।
अनुष्टुप्छन्दः ।शनैश्चरो देवता ।
शं बीजम् । नं शक्तिः ।
मं कीलकम् । शनैश्चरप्रसादसिद्ध्यर्थे जपे विनियोगः ।
शनैश्चराय अङ्गुष्ठाभ्यां नमः ।
मन्दगतये तर्जनीभ्यां नमः ।
सौराय अनामिकाभ्यां नमः ।
शुष्कोदराय कनिष्ठिकाभ्यां नमः ।
छायात्मजाय करतलकरपृष्ठाभ्यां नमः ।
शनैश्चराय हृदयाय नमः ।
मन्दगतये शिरसे स्वाहा ।
अधोक्षजाय शिखायै वषट् ।
सौराय कवचाय हुम् ।
शुष्कोदराय नेत्रत्रयाय वौषट् ।
छायात्मजाय अस्त्राय फट् ।
भूर्भुवःसुवरोमिति दिग्बन्धः ।
ध्यानम् ।
चापासनो गृध्ररथस्तु नीलः प्रत्यङ्मुखः काश्यपगोत्रजातः ।
सशूलचापेषुगदाधरोऽव्यात् सौराष्ट्रदेशप्रभवश्च सौरिः ॥ १॥

नीलाम्बरो नीलवपुः किरीटी गृध्रासनस्थो विकृताननश्च ।
केयूरहारादिविभूषिताङ्गः सदास्तु मे मन्दगतिः प्रसन्नः ॥ २॥

शनैश्चराय शान्ताय सर्वाभीष्टप्रदायिने ।
नमः सर्वात्मने तुभ्यं नमो नीलाम्बराय च ॥ ३॥

द्वादशाष्टमजन्मानि द्वितीयान्तेषु राशिषु ।
ये ये मे सङ्गता दोषाः सर्वे नश्यन्तु वै प्रभो ॥ ४॥

सूत उवाच ।
शृणुध्वं मुनयः सर्वे शनिपीडाहरं शुभम् ।
शनिप्रीतिकरं स्तोत्रं सर्वाभीष्टफलप्रदम् ॥ ५॥

पुरा कैलासशिखरे पार्वत्यै शङ्करेण च ।

उपदिष्टं शनिस्तोत्रं प्रवक्ष्यामि तपोधनाः ॥ ६॥

रघुवंशेऽतिविख्यातो राजा दशरथः प्रभुः ।
बभूव चक्रवर्ती च सप्तद्वीपाधिपो बली ॥ ७॥

कृत्तिकान्ते शनौ याते दैवज्ञैर्ज्ञापितो हि सः ।
रोहिणीशकटं भित्वा शनिर्यास्यति साम्प्रतम् ॥ ८॥

इत्थं शकटभेदेन सुरासुरभयङ्करम् ।
द्वादशाब्दं तु दुर्भिक्षं भविष्यति सुदारुणम् ॥ ९॥

देशाश्च नगरग्रामाः भयभीताः समन्ततः ।
ब्रुवन्ति सर्वलोकानां भयमेतत्समागमम् ॥ १०॥

एवमुक्तस्ततो वाक्यं मन्त्रिभिः सह पार्थिवः ।
व्याकुलं तु जगद्दृष्ट्वा पौरजानपदादिकम् ॥ ११॥

पप्रच्छ प्रयतो राजा वसिष्ठप्रमुखान् ऋषीन् ।
समाधानं किमस्यास्ति ब्रूत मे मुनिसत्तमाः ॥ १२॥

प्रजानां परिरक्षायै सर्वज्ञाः सर्वदर्शिनः ।
तच्छ्रुत्वा मुनयः सर्वे प्रोचुरस्य बलं महत् ॥ १३॥

शनैश्चरेण शकटे तस्मिन् भिन्ने कुतः प्रजाः ।
अयं योगो ह्यसाध्यं तु शक्रब्रह्मादिभिस्तथा ॥ १४!!
स तु सञ्चिन्त्य मनसा सहसा पुरुषर्षभः ।
समादाय धनुर्दिव्यं दिव्यायुधसमन्वितम् ॥ १५॥

रथमारुह्य वेगेन गतो नक्षत्रमण्डलम् ।
सपादयोजनं लक्षं सूर्यस्योपरि संस्थितम् ॥ १६॥

रोहिणीं पृष्ठतः स्थाप्य राजा दशरथस्तदा ।
रथे तु काञ्चने दिव्ये सर्वरत्नविभूषिते ॥ १७॥

हंसवर्णहयैर्युक्ते महाकेतुसमुच्छ्रिते ॥

दीप्यमानो महारत्नकिरीटकटकादिभिः ॥ १८॥

बभ्राज स तदाकाशे द्वितीय इव भास्करः ।
आकर्णपूर्णचापेन संहारास्त्रं न्ययोजयत् ॥ १९॥

संहारास्त्रं शनिर्दृष्ट्वा सुरासुरभयङ्करम् ।
कृत्तिकान्ते तदा स्थित्वा प्रविशन् किल रोहिणीम् ॥ २०॥

दृष्ट्वा दशरथं चाग्रे तस्थौ स भ्रुकुटीमुखः ।
हसित्वा तद्भयात्सौरिरिदं वचनमब्रवीत् ॥ २१॥

पौरुषं तव राजेन्द्र सुरासुरभयङ्करम् ।
देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः ॥ २२॥

मयावलोकिताः सर्वे दैन्यमाशु व्रजन्ति ते ।
तुष्टोऽहं तव राजेन्द्र तपसा पौरुषेण च ॥ २३॥

वरं ब्रूहि प्रदास्यामि मनसा यदभीप्सितम् ।
दशरथ उवाच ।
(प्रसादं कुरु मे सौरे वरदो यदि मे स्थितः ।)
अद्य प्रभृति मे राष्ट्रे पीडा कार्या न कस्यचित् ॥ २४॥

रोहिणीं भेदयित्वा तु न गन्तव्यं त्वया शने ।
सरितः सागराः सर्वे यावच्चन्द्रार्कमेदिनी ॥ २५॥

द्वादशाब्दं तु दुर्भिक्षं न कदाचिद्भविष्यति ।
याचितं तु मया सौरे नान्यमिच्छाम्यहं वरम् ॥ २६॥

एवमस्त्विति सुप्रीतो वरं प्रादात्तु शाश्वतम् ।
कीर्तिरेषा त्वदीया च त्रैलोक्ये सम्भविष्यति ॥ २७॥

प्राप्य चैनं वरं राजा कृतकृत्योऽभवत्तदा ।
एवं वरं तु सम्प्राप्य हृष्टरोमा स पार्थिवः ॥ २८॥

रथोपस्थे धनुः स्थाप्य भूत्वा चैव कृताञ्जलिः ।
ध्यात्वा सरस्वतीं देवीं गणनाथं विनायकम् ॥ २९॥

राजा दशरथः स्तोत्रं सौरेरिदमथाकरोत् ।
दशरथ उवाच ।
नमः कृष्णाय नीलाय शिखिकण्ठनिभाय च ॥ ३०॥

नमो नीलमुखाब्जाय नीलोत्पलनिभाय च ।
नमो निर्मांसदेहाय दीर्घश्मश्रुजटाय च ॥ ३१॥

नमो विशालनेत्राय शुष्कोदर भयानक ।
नमः परुषनेत्राय स्थूलरोंणे नमो नमः ॥ ३२॥

नमो नित्यं क्षुधार्ताय अतृप्ताय नमो नमः ।
नमो दीर्घाय शुष्काय कालदंष्ट्राय ते नमः ॥ ३३॥

नमस्ते घोररूपाय दुर्निरीक्ष्याय ते नमः ।
नमो घोराय रौद्राय भीषणाय कराळिने॥ ३४॥

नमस्ते सर्वभक्षाय वलीमुख नमो।स्तु ते ।
सूर्यपुत्र नमस्तेस्तु भास्करोऽभयदायिने ॥ ३५॥

अधोदृष्टे नमस्तेऽस्तु संवर्तक नमो नमः ।
नमो मन्दगते तुभ्यं निस्त्रिंशाय नमो नमः ॥ ३६॥

नमो दुःसहदेहाय नित्ययोगरताय च ।
ज्ञानदृष्टे नमस्तेऽस्तु कश्यपात्मजसूनवे ॥ ३७॥

तुष्टो ददासि त्वं राज्यं क्रुद्धो हरसि तत्क्षणात् ।
देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः ॥ ३८॥

त्वयावलोकिताः सर्वे दैन्यमाशु व्रजन्ति ते ।
ब्रह्मा शक्रो यमश्चैव ऋषयः सप्त सागराः ॥ ३९॥

राज्यभ्रष्टा भवन्तीह तव दृष्ट्यावलोकिताः ।
देशाश्च नगरग्रामाः द्वीपाश्च गिरयस्तथा ॥ ४०॥

सरितः सागराः सर्वे नाशं यान्ति समूलतः ।
प्रसादं कुरु मे सौरे वरदोऽसि महाबल ॥ ४१॥

एवमुक्तस्तदा सौरिः ग्रहराजो महाबलः ।
अब्रवीच्च शनिर्वाक्यं हृष्टरोमा स भास्करिः ॥ ४२॥

शनिरुवाच।

तुष्टोऽहं तव राजेन्द्र स्तोत्रेणानेन सुव्रत ।
वरं ब्रूहि प्रदास्यामि मनसा यदभीप्सितम् ॥ ४३॥

दशरथ उवाच ।
प्रसन्नो यदि मे सौरे पीडां कुरु न कस्यचित् ।
देवासुरमनुष्याणां पशुपन्नगपक्षिणाम् ॥ ।४४॥

शनिरुवाच ।
ग्रहणाच्च ग्रहाज्ञेयाः ग्रहाः पीडाकराः स्मृताः ।
अदेयोऽपि वरोऽस्माभिः तुष्टोऽहं तु ददामि ते ॥ ४५॥

देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः ।
पशुपक्षिमृगा वृक्षाः पीडां मुञ्चन्तु सर्वदा ॥ ४६॥

त्वया प्रोक्तमिदं स्तोत्रं यः पठेदिह मानवः ।
एककालं क्वचित्कालं पीडां मुञ्चामि तस्य वै ॥ ४७॥

मृत्युस्थानगतो वापि जन्मव्ययगतोऽपि वा ।
पठति श्रद्धया युक्तः शुचिः स्नात्वा समाहितः ॥ ४८॥

शमीपत्रैः समभ्यर्च्य प्रतिमां लोहजां मम ।
माषौदनं तिलैर्मिश्रं दद्याल्लोहं तु दक्षिणाम् ॥ ४९॥

कृष्णाङ्गां महिषीं वस्त्रं मामुद्दिश्य द्विजातये ।
मद्दिने तु विशेषेण स्तोत्रेणानेन पूजयेत् ॥ ५०॥

पूजयित्वा जपेत्स्तोत्रं भुक्त्वा चैव कृताञ्जलिः ।
तस्य पीडां न चैवाहं करिष्यामि कदाचन ॥ ५१॥

गोचरे जन्मलग्ने वा दशास्वन्तर्दशासु च ।
रक्षामि सततं तस्य पीडास्वन्यग्रहस्य च ॥ ५२॥

अनेनैव प्रकारेण पीडामुक्तं जगद्भवेत् ।
सूत उवाच ।
वरद्वयं तु सम्प्राप्य राजा दशरथस्तदा ॥ ५३॥

मेने कृतार्थमात्मानं नमस्कृत्य शनैश्चरम् ।
शनिना चाभ्यनुज्ञातः स्वस्थानमगमत् नृपः ॥ ५४॥

स्वस्थानं च ततो गत्वा प्राप्तकामोऽभवत्तदा ।
कोणः शनैश्चरो मन्दः छायाहृदयनन्दनः ॥ ५५॥

मार्ताण्डजस्तथा सौरिः पातङ्गिर्ग्रहनायकः ।
ब्रह्मण्यः क्रूरकर्मा च नीलवस्त्रोऽञ्जनद्युतिः ॥ ५६॥

द्वादशैतानि नामानि यः पठेच्च दिने दिने ।
विषमस्थोऽपि भगवान् सुप्रीतस्तस्य जायते ॥ ५७॥

मन्दवारे शुचिः स्नात्वा मिताहारो जितेन्द्रियः ।
तद्वर्णकुसुमैर्युक्तं सर्वाङ्गं द्विजसत्तमाः ॥ ५८॥

पूरयित्वान्नपानाद्यैः स्तोत्रं यः प्रयतः पठेत् ।
पुत्रकामो लभेत्पुत्रं धनकामो लभेद्धनम् ॥ ५९॥

राज्यकामो लभेद्राज्यं जयार्थी विजयी भवेत् ।
आयुष्कामो लभेदायुः श्रीकामः श्रियमाप्नुयात् ॥ ६०॥

यद्यदिच्छति तत्सर्वं भगवान् भक्तवत्सलः ।
चिन्तितानि च सर्वाणि ददाति च न संशयः ॥ ६१॥

इति श्री दशरथमहाराजकृतं शनैश्चरस्तोत्रं सम्पूर्णम् ।

शनैश्चरस्तोत्रम्
श्रीगणेशाय नमः ॥

अस्य श्रीशनैश्चरस्तोत्रस्य । दशरथ ऋषिः ।
शनैश्चरो देवता । त्रिष्टुप् छन्दः ॥

शनैश्चरप्रीत्यर्थ जपे विनियोगः ।
दशरथ उवाच ॥

कोणोऽन्तको रौद्रयमोऽथ बभ्रुः कृष्णः शनिः पिंगलमन्दसौरिः ।
नित्यं स्मृतो यो हरते च पीडां तस्मै नमः श्रीरविनन्दनाय ॥ १॥

सुरासुराः किंपुरुषोरगेन्द्रा गन्धर्वविद्याधरपन्नगाश्च ।
पीड्यन्ति सर्वे विषमस्थितेन तस्मै नमः श्रीरविनन्दनाय ॥ २॥

नरा नरेन्द्राः पशवो मृगेन्द्रा वन्याश्च ये कीटपतंगभृङ्गाः ।
पीड्यन्ति सर्वे विषमस्थितेन तस्मै नमः श्रीरविनन्दनाय ॥ ३॥

देशाश्च दुर्गाणि वनानि यत्र सेनानिवेशाः पुरपत्तनानि ।
पीड्यन्ति सर्वे विषमस्थितेन तस्मै नमः श्रीरविनन्दनाय ॥ ४॥

तिलैर्यवैर्माषगुडान्नदानैर्लोहेन नीलाम्बरदानतो वा ।
प्रीणाति मन्त्रैर्निजवासरे च तस्मै नमः श्रीरविनन्दनाय ॥ ५॥

प्रयागकूले यमुनातटे च सरस्वतीपुण्यजले गुहायाम् ।
यो योगिनां ध्यानगतोऽपि सूक्ष्मस्तस्मै नमः श्रीरविनन्दनाय ॥ ६॥

अन्यप्रदेशात्स्वगृहं प्रविष्टस्तदीयवारे स नरः सुखी स्यात् ।
गृहाद् गतो यो न पुनः प्रयाति तस्मै नमः श्रीरविनन्दनाय ॥ ७॥

स्रष्टा स्वयंभूर्भुवनत्रयस्य त्राता हरीशो हरते पिनाकी ।
एकस्त्रिधा ऋग्यजुःसाममूर्तिस्तस्मै नमः श्रीरविनन्दनाय ॥ ८॥

शन्यष्टकं यः प्रयतः प्रभाते नित्यं सुपुत्रैः पशुबान्धवैश्च ।
पठेत्तु सौख्यं भुवि भोगयुक्तः प्राप्नोति निर्वाणपदं तदन्ते ॥ ९॥

कोणस्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः ।
सौरिः शनैश्चरो मन्दः पिप्पलादेन संस्तुतः ॥ १०॥

एतानि दश नामानि प्रातरुत्थाय यः पठेत् ।
शनैश्चरकृता पीडा न कदाचिद्भविष्यति ॥ ११॥

॥ इति श्रीब्रह्माण्डपुराणे श्रीशनैश्चरस्तोत्रं सम्पूर्णम् ॥